लघु-ग्रन्थमाला

[४२]

महाकविमुकुन्दप्रणीतो

# जानकीपरिणयः

(अङ्क चतुष्टयात्मकः)




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

# सुसंग्राह्याः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनपुस्तकालये संरक्षितानां हस्तलिखितपाण्डुलिपीनां विवरणपञ्जिकाः

## (Descriptive Catalogue of the Manuscripts)

| ग्रन्थनाम | मूल्यम् |
|---|---|
| १—विवरणपञ्जिका (प्रथमः खण्डः)—खण्डेऽस्मिन् वेदोपनिषद्विषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रदत्तम्— | ३·२५ |
| २—विवरणपञ्जिका (प्रथमखण्डस्य द्वितीयो भागः)—खण्डेऽस्मिन् उपनिषद्विषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रदत्तम्— | २-०६ |
| ३—विवरणपञ्जिका (द्वितीयखण्डस्य प्रथमो भागः)—खण्डेऽस्मिन् कर्मकाण्डविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | २-५० |
| ४—विवरणपञ्जिका (द्वितीयखण्डस्य द्वितीयो भागः)—अस्मिन्नपि खण्डे कर्मकाण्डविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | २-०० |
| ५—विवरणपञ्जिका (तृतीयः खण्डः)—खण्डेऽस्मिन् धर्मशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ४-३० |
| ६—विवरणपञ्जिका (चतुर्थः खण्डः)—खण्डेऽस्मिन् पुराणेतिहास-श्रीमद्भगवद्गीताविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ६-२५ |
| ७—विवरणपञ्जिका (पञ्चमखण्डस्य प्रथमो भागः)—खण्डेऽस्मिन् स्तोत्रसाहित्यविषयिणीनां पाण्डुलिपीनां सपरिचयं विवरणं प्रकाशितम्— | ७-२५ |
| ८—विवरणपञ्जिका (पञ्चमखण्डस्य द्वितीयो भागः)—अस्मिन्नपि खण्डे स्तोत्रसाहित्यस्य परिचयात्मकं विवरणं प्रकाशितम्— | ७-२५ |
| ९—विवरणपञ्जिका (षष्ठः खण्डः)—खण्डेऽस्मिन् तन्त्रशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ६-०० |
| १०—विवरणपञ्जिका (सप्तमः खण्डः)—खण्डेऽस्मिन् सांख्य-योग-मीमांसा-वेदान्तादिविषयिणीनां पाण्डुलिपीनां परिचयपुरःसरं विवरणं प्रकाशितम्— | ७ ०० |
| ११—विवरणपञ्जिका (अष्टमः खण्डः)—खण्डेऽस्मिन् न्याय-वैशेषिकदर्शनविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ८-५० |
| १२—विवरणपञ्जिका (नवमः खण्डः)-खण्डेऽस्मिन् ज्योतिषशास्त्रविषयिणीनां पाण्डुलिपीनां परिचयात्मकं विवरणं प्रकाशितम्— | ७-५० |
| १३—विवरणपञ्जिका (दशमः खण्डः)—खण्डेऽस्मिन् व्याकरणशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ६-०० |
| १४—विवरणपञ्जिका (एकादशः खण्डः)—खण्डेऽस्मिन् साहित्यशास्त्रविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ८-५० |
| १५—विवरणपञ्जिका (द्वादशः खण्डः)—खण्डेऽस्मिन् आयुर्वेद-शिल्पशास्त्र-संगीतशास्त्र-नीतिशास्त्र-धनुर्वेदशास्त्र-जैनभक्तिसम्प्रदाय-देशीभाषाप्रभृतिविषयिणीनां पाण्डुलिपीनां विवरणं प्रकाशितम्— | ८-०० |

१६—एषामग्रेऽपि विवरणपञ्जिकायाः चतुर्दशखण्डा मुद्रितप्रायाः, येषां प्रकाशनं शीघ्रमेव भवितेति।

प्राप्तिस्थानम्-विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२

LAGHU-GRANTHAMĀLĀ

[Vol. 42]

# JĀNAKĪPARIṆAYA

OF

MAHĀKAVI MUKUNDA

EDITED BY

ŚRĪ ACYUTA NĀTHA JHĀ

Dy. Librarian

Sampurnanand Sanskrit University

Varanasi




VARANASI

1986

लघु-ग्रन्थमाला

[ ४२ ]

महाकविमुकुन्दप्रणीतो

# जानकीपरिणयः

सम्पादकः
श्रीमद्-अच्युतनाथझाः
उप-पुस्तकाध्यक्षः,
सरस्वतीभवनपुस्तकालयस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी




वाराणस्याम्

२०४३ तमे वैक्रमाब्दे १९०८ तमे शकाब्दे १९८६ तमे खैस्ताब्दे

प्रकाशकः—
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

•

प्राप्तिस्थानम्:—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य
वाराणसी—२२१००२

•

प्रथमं संस्करणम्—५०० प्रतिरूपाणि
मूल्यम्—३-०० रूप्यकाणि

•

मुद्रकः—
**तारा प्रिंटिंग वर्क्स,**
कमच्छा, वाराणसी

# उपोद्घातः

अथेदमुपस्थाप्यते विपश्चितां पुरत इदं जानकीपरिणयाख्यं नाटकम्। इदं च प्रायः पद्यमयमेव। अत्र विश्वामित्रेण सह भगवतो रामचन्द्रस्य मिथिलाप्रवेशमारभ्य सीतामुद्वाह्य प्रत्यावर्त्तनं ततश्चायोध्यामागत्याभिषेकसम्भारेषूपस्थितेषु ससीतस्य रामस्य वनगमनम्, तत्र रावणेन तद्धरणम्, तद्विरहे रामविलपनम्, सागरे सेतु बद्ध्वा रावणं विजित्य पुनः सीताप्तिं यावत् कथानकं कविना निबद्धम्। नाटकान्तरेभ्यः कथान्तरेभ्यश्चात्र कविप्रतिभानिबद्धो रचनाविशेषः सर्वाण्यतिशेते। तच्च यथा स्वयंवरे राज्ञां शिवधनुर्भङ्गेऽसामर्थ्यमवलोक्य जनकस्य—

न ज्ञातं शूरशून्येयं मेदिनी निखिलाधुना।
गर्दभीव परिश्रान्ता भारं वहति केवलम्॥

इति परितप्यतो विश्वामित्रमुपसृत्याधुना मया किं कर्त्तव्यमिति प्रश्नः तस्मै च भगवदवतरणं विज्ञाप्य रामाय ऋषेर्धनुर्भङ्गादेशः।

शतानन्दस्यायोध्यां प्रस्थितस्य वशिष्ठस्यातिथ्यं गृह्णतस्तेनोक्तिप्रत्युक्ती, विवाहसमये मैथिलश्रोत्रियाणां लोकाचारनिदर्शनम्, यथा जामात्रे पर्णस्थालीप्रदानं वधूभगिनीभिस्तद्भ्रातृजायाभिश्च वरं प्रति दुलारवाचः, राजभवनोत्सवे विविध-लोकगीतेषु गीयमानेषु तत्तद्रागाणां नामनिर्देश इत्यादिः।

अस्य नाटकस्य प्रणेता मुकुन्दापरनामधेयो मधुसूदनमिश्र इति तु—

'श्रीमत्साधुशिरोमणिः प्रियसखः श्रीमान् **मुकुन्दाभिधः**
चक्रे कोमलगद्यपद्यवलितं बन्धुप्रियं यत्स्फुटम्'।

इति प्रथमाङ्के षष्ठपद्यात्।

'धीरो धैर्यमहोदधिर्मधुरिपुः श्रीमान् बबन्धाचलैः'।

इति चतुर्थाङ्के २९ पद्ये श्लिष्टेन स्फुटं प्रतीयते।

अस्मत्सङ्ग्रहस्थायां प्रारम्भ एवाधोलिखितं पद्यद्वयमङ्कितं वर्त्तते—

हाटीग्रामसमन्वितेऽमलकुले सत्सोदराख्ये पुरे
जातः श्री-अभिरामनामधरणीदेवः सुधीर्मैथिलः।
तत्पुत्रः सुमतिः सुशाब्दिकवरः श्रीबूढनः सज्जनः
ख्यातो जात इहोत्तमोत्तमयशास्तारापदाराधनात्॥ १॥

तत्सूनुर्मधुसूदनः सुवदनः श्रीकेशवस्यानुजः
श्रीमाँच्छस्तसमस्तशास्त्ररसिकः श्रीरामभक्तः सुधीः ।
सीतारामविवाहरीतिवलितं सिन्धुप्रबन्धान्वितं
कर्तुं स्वल्पतरं सुनाटकमहं स्वेष्टप्रदं प्रारभे ॥ २ ॥

एतेन कवेरस्य पूर्ण एव परिचय उपलभ्यते यदयं सोदरपुर-हाटी-मूलग्रामस्थ-मिश्रवंशोत्पन्नस्याभिरामस्य पौत्रः श्रीवूढनस्य पुत्रः श्रीकेशवस्य चानुज आसीदिति; किन्तु ग्रन्थारम्भे मङ्गलाचरणात्प्रागेवैवं स्ववृत्तान्तख्यापनं कविपरम्परानन‌ुमतं मन्यते । अत एवापरमात्रिकयोः (सरस्वतीभवनस्थ-दरभङ्गाराजग्रन्थालयस्थयोः) नास्त्येतत्पद्यद्वयम् । मन्ये केनापि तत्कालीनेन तदभिज्ञेन वा प्रतिलिपिकाले तल्लिखितं स्यात् । कविश्च मङ्गलानन्तरं चतुर्थश्लोके स्वपरिचयं मुकुन्दनाम्ना ददात्येव । पूर्वमेव मधुसूदनाख्यया दत्ते परिचये पुनः मुकुन्दाख्येन परिचयदानं पुनरुक्तिरेव प्रतीयते । अतो येन केनापि लिखितमेतत्पद्यद्वयं कविवंशपरम्परापरिचायकं त्वस्मत्कृते वर्त्तत एव ।

अयं च कविः मिथिलेश्वरस्य श्रीमन्महेश्वरसिंहस्य राज्यकालेऽभवदिति नाटकेऽस्मिन्नेवानेनोल्लेखः कृतः । महाराजो महेश्वरसिंह ईसवीय १८५० तः १८६० यावन्मिथिलां शशास । अस्य च नाटकस्य प्रणयनम्—"चान्द्रे पुस्करनागवाजिविधुभिः संशोभितेऽब्दे" इति चतुर्थाङ्कस्थ २९ पद्यात् १७८० शके, १८५८ ईसवीयेऽभवदिति स्पष्टमेव ।

**अस्य सम्पादने मया मात्रिकात्रयमुपयोजितम्—**

१. अस्मत्पितामहस्य संग्रहालयीया मात्रिका "क" संज्ञया व्यवहृता,

२. सरस्वतीभवनस्था "ख" संज्ञया व्यवहृता,

३. दरभङ्गाराजपुस्तकालयस्था "ग" संज्ञया व्यवहृता,

ख० ग० मात्रिके प्रायस्तुल्य एव । 'क' मात्रिकायां यत्र पाठभेदादिः, तट्टिपण्यां निर्दशितम् ।

एवं यथामति कृतेऽस्मिन्सम्पादनेऽल्पज्ञतया दृष्टिदोषवशाद्वा या स्यान्न्यूनता, तद्विमृश्य क्षाम्यन्तु कृपाधना विपश्चित्प्रवरा इति भूयो निवेदये—

**अच्युतनाथझाः**

उपपुस्तकाध्यक्षः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी ।

श्रीकृष्णजन्माष्टम्याम्,
२०४२ तमे वैक्रमाब्दे

# जानकीपरिणयस्य पात्राणां परिचयः

(१) **सूत्रधारः**—यथास्थानं कथांशानां सूचकः ।

(२) **पारिपार्श्वः**—सूत्रधारस्य सहायकः ।

(३) **मिथिलाधिपः**—सीरध्वजो नाम मिथिलामहीमहेन्द्रः ।

(४) **श्रीरामचन्द्रः**—अयोध्याधिपतेर्दशरथस्य सूनुः, नाटकस्यास्य नायकः ।

(५) **जानकी**—मिथिलाधिपतेः पुत्री ( नायिका ) ।

(६) **लक्ष्मणः**—रामानुजः ।

(७) **राजमण्डलः**—स्वयंवरे समवेतानां राज्ञां समूहः ।

(८) **विश्वामित्रः**—मुनिः, रामस्यास्त्रविद्यागुरुः ।

(९) **शतानन्दः**—मिथिलाधिपतेः पुरोहितो गौतमसूनुः ।

(१०) **वशिष्ठः**—अयोध्याधिपतेर्दशरथस्य पुरोहितः ।

(११) **वरयात्रिकाः**—कोशलपुरवासिनः ।

(१२) **नटीनटादिकाः**—नृत्यकराः ।

(१३) **मैथिलपुरन्ध्र्यः**—गीतगायिकाः, उक्तिप्रत्युक्तिकारिण्यश्च ।

(१४) **सुग्रीवः**—बालिभ्राता, बालिना प्रताडितो वानरराजः ।

(१५) **रावणः**—सीतापहारको राक्षसराजः ।

(१६) **हनूमान्**—रामभक्तः, सुग्रीवेण रामस्य मैत्रीकरः कपिः ।



महाकविमुकुन्दप्रणीतो

# जानकीपरिणयः

❀ ❀ ❀

## अथ प्रथमोऽङ्कः

॥ ॐ नमश्शिवाय ॥

नृत्यारम्भे दधानोऽमृतशयशकलं मस्तके मञ्जुभूषां
भालव्यासक्तवह्निस्सुरुचिररुधिरां रक्तकृत्तिं वसानः ।
भ्राम्यद्वल्ल्याकुलेन्दुस्खलदमृतरसप्राप्तदेहार्द्रवासो
नग्नो मग्नो विभूत्यै सहसितगिरिजः पातु वो नृत्यतीशः ॥ १ ॥

वर्द्धितधनजन सुखितसुकविजन[1] विद्यावितरण
भवभयसुहरण सुनमितसुरगण शरणपते ।
लम्बोदर बुधवर गजमुख शरकर
जय जय[2] जय जय आखुगते ॥ २ ॥

नान्द्यन्ते सूत्रधारः

दिव्यदीप्तिसुदिव्यदीपकदीपकद्रुमराजिता
राजतेऽमरकल्पकल्पितचारुतल्पविभूषिता ।
देवराजसभेव पण्डितमण्डलीवलिता शुभा
मोहमानयतीति मे हितचित्तवृत्तिमसौ सभा ॥ ३ ॥

पारिपार्श्वः—

भावभारभरालसाखिललोकरञ्जनकारिका
कामिनी तव यामिनीशमुखी सखीवलितालिका ।
यातया सह बालया रमयाशु तामनुमोदयन्
जानकीपरिणीतिरीतिसुगीतिमङ्गलमीरयन् ॥ ४ ॥

---

१. कविगण—ख० । २. जयमय—क. ।

भद्रं साधु स्मारितमिति निगद्य पुनस्सूत्रधारः—

यद्यपीह भुवि दुर्ज्जना मुहुर्दूषयन्ति गुणिनः श्रमानपि।
तांस्तथापि सदयाः सुसज्जनाः संस्तुवन्ति खलु यत् समर्थनैः ॥ ५ ॥

श्रीलश्रीलमहेश्वराभिधमहाराजादृतस्तार्क्किकः
श्रीमत्साधुशिरोमणिप्रियसखः श्रीमान् मुकुन्दाभिधः।
चक्रे कोमलगद्यपद्यवलितं बन्धुप्रियं यत्स्फुटं
हेसन्तस्तदुदीरयेऽहमधुना दोषोऽत्र नः क्षम्यताम् ॥ ६ ॥

शृणु तावद्विविधविरुदावलीविराजमानमानोन्नतमहोग्रप्रतापसन्तापिताहितसन्तानसन्ततिसुनीतिसन्ततसन्तोषितसंसारमिथिलालङ्कारश्रीश्रीश्रीजनकमहाराजाधिराजप्रेरिताखिलचारप्रचारसञ्चारिवङ्गकलिङ्गकेकयकेरलकाश्मीराद्यखिलदिक्पालभूपालचक्रचारुचूडामणिमरीचिमर्द्दनमहार्हमणिगणमण्डितव्यस्तसमस्तसदःस्थासनसमासीना नरनायकावली विशङ्कमानाऽनलनिवहनिभावली मुहुरवलोकयन्ती ललाप ॥ १ ॥

तामेव पौरानभिमोहयन्तीं दिशः प्रभाभिः पथि भासयन्तीम्।
प्रस्तौति रङ्गाभिमुखं व्रजन्तीं श्रीराघवीयां श्रियमावहन्तीम् ॥ ७ ॥

श्रीरामचन्द्रं रघुवंशचन्द्रं नरेन्द्रचन्द्रं मुनिचित्तचन्द्रम्।
सभासु चन्द्रं जनकस्य लोको विलोक्य मेनेऽखिललोकचन्द्रम् ॥ ८ ॥

समागतं तं गुरुणा समेतं सलक्ष्मणं बालकमम्बुजाक्षम्।
दूर्वादलश्यामतनुं निरीक्ष्य निमेषशून्या मुनयो बभूवुः ॥ ९ ॥

तेजोमयं दिव्यतनुं महेशं शैवाः परं देवमयं विरञ्चिम्।
ब्राह्मया मुहुर्वैष्णवदिव्यदेहं तं मेनिरे वैष्णवभावविज्ञाः ॥ १० ॥

धीरास्तथा धीरतरं महान्तं महाशयाश्शूरवरं हि शूराः।
क्रूरास्तथा क्रूरतरं सुविज्ञा विज्ञैकविज्ञं वरदं सुभक्ताः ॥ ११ ॥

जरातुरा राजकुमाररत्नं कामं निकामं वरयोषितश्च।
बाला बलन्तं गुणवन्तमारात्काम्यं युवानं शिशवश्शिशुञ्च ॥ १२ ॥

ततोऽतिलोलालकलोचनानां पौराङ्गनानाञ्च विलोकनानि।
सौन्दर्यपङ्केषु विमज्जितानि मुहूर्त्तमार्त्तानि सुमन्थराणि ॥ १३ ॥

बभूवुरुत्कानि मनांसि नादं निशम्य सद्यः कुलकामिनीनाम् ।
जग्मुस्ततस्तास्त्वरितं स्वकृत्यं त्यक्त्वा स्वसौधात् विलोकनाय ॥ १४ ॥

सम्मुक्तवेशाः श्लथबद्धकेशाः संस्रस्तवेण्यस्सहसा तरुण्यः ।
केशानशेषानपि साधयन्त्यः सिन्दूरबिन्दूनपि योजयन्त्यः ॥ १५ ॥

सुनीलचेलावृतचारुमुख्यो मेघावृतेन्दुं सहसा हसन्त्यः ।
कौसुम्भरागारुणचित्रवस्त्राः प्रफुल्लपद्माननपद्मनेत्राः ॥ १६ ॥

श्यामाः सरोजनयना नयनारविन्दमेकं सुखञ्जनसुगञ्जनलोचनञ्च ।
कृत्वैव खञ्जनदृशोऽञ्जनरञ्जितञ्च चञ्चत्सुकाञ्चनविभूषणभूषिताङ्ग्यः ॥ १७ ॥

उद्धूय बाहुलतिके लतिकेलिदक्षाः स्वच्छावतंसवरहंसगताः सुमुख्यः ।
सम्मुक्तमौक्तिकभराँश्चिकुरान्प्रसाध्य धीराः सुचीरवसना दशनाङ्कितौष्ठ्यः ॥ १८ ॥

ततः कनकमण्डितं नृपतिरङ्गपार्श्वङ्गतं
तिरस्करिणिकावृतं धवलधामधारामुखम् ।
उपेत्य विमलानना कमललोचना जानकी
पितुः पणमिवाशृणि खलु निशम्य तस्थुर्दृढम् ॥ १९ ॥

धनुस्त्रिपुरनाशिनो नमयतीह यो लीलया
स एव मम कन्यकापतिरतीव मान्यो भवेत् ।
प्रणम्य विहिताञ्जलिर्नृपतयोऽत्र याचे हि वो
यथा नहि वृथा भवेदिति पणोऽत्र कार्य्यं तथा ॥ २० ॥

श्रुत्वा तद्वचनं विवादसदनं त्वन्योन्यमूचुर्वृथा
केचिद्गर्व्वसमन्विताः क्षितिभुजः कर्त्तुं तथेति क्षमाः ।
धीराश्शूरतरा विविच्य वचनं विज्ञाय वज्राधिकं
चापञ्चन्द्रिसमानताविरहितैर्लोकैर्वृथाऽयं महः ॥ २१ ॥

इष्टाशाविमुखी सखी विधुमुखी प्रावाच किञ्चिद्वचः
श्रुत्वा तत्सुमुखी सखीव विदुषी चक्रे च गौरीस्तुतिम् ।
चञ्चच्चारुमरीचिचन्द्रवदनां सीतां नुतौ सन्नतां
ज्ञात्वा योगबलेन गर्व्ववचनं व्यादिष्टवाँल्लक्ष्मणः ॥ २२ ॥

कोदण्डं खण्डखण्डं कलयितुमनवं भ्रातुरुक्त्याहमीश-
श्चण्डास्फोटप्रचण्डा नमयितुमबलाः कुर्वते स्फोटमेव।
शक्ता ये चाभियुक्तास्स्वयमिह सहसा स्फोटयन्ति प्रभुत्वं
कन्यां धन्यातिधन्यां सुनमितधनुषो नोद्वहन्त्याशु कस्मात् ॥ २३ ॥

ततो नृपतिमण्डलीवलितवीरवेषावली
विहाय कनकासनं समभिसृत्य बाणासनम्।
सुतोलयितुमाकुलाप्यचलमेव भूमीतला-
दवेत्य विमना भृशं खलु चचाल शीर्णाऽनिशम् ॥ २४ ॥

॥ इति श्रीजानकीपरिणये[1] प्रथमोऽङ्कः ॥

● ● ●

---

१. 'रङ्गभङ्गो नाम' इत्यधिकः पाठः—क०।

## अथ द्वितीयोऽङ्कः

ततः किमिति पारिपार्श्वपरिप्रश्ने[1] सूत्रधारः—

अथ राज्ञां समुद्विग्नां सोमसूर्याग्निवर्च्चसाम् ।
विशीर्णां मण्डलीं दृष्ट्वा प्रोवाच मिथिलाधिपः ॥१॥

न ज्ञातं शूरशून्येयं मेदिनी निखिलाधुना ।
गर्द्दभीव परिश्रान्ता भारं वहति दुस्सहम् ॥२॥

राजानो गतदर्प्पास्तु क्षीणपुण्या इव ग्रहाः ।
चक्रिरे मुहुरुत्पातं समाजे मे सहस्रशः ॥३॥

तस्मान्मे सहसा स्वान्तं क्लान्तं भवति यन्मुने ।
कृताञ्जलिपुटो भूत्वा प्रार्थयेऽहं तु तद्गतिम् ॥४॥

भवन्तस्सर्वतत्त्वज्ञा वेदवेदान्तपारगाः ।
सर्वथा सर्वकार्येषु दक्षा यक्षादयो यथा ॥५॥

लोकानाञ्चोपकर्त्तारस्सर्वेषां ज्ञानचक्षुषा ।
उपायमार्गान्विविधान्दर्शयन्ति यदृच्छया ॥६॥

ततोऽसौ कृपयाविष्टो जनकं प्राह सादरम् ।
विश्वामित्रोऽपरो धाता नव्यसृष्टिकरो मुनिः ॥७॥

मा गास्शोकस्य पन्थानं यतो राजर्षिसत्तम ।
श्रीमान्दाशरथी रामः साक्षाद्विष्णुरिहागतः ॥८॥

भस्मनाच्छादितो वह्निर्यथाऽऽदर्शो मलेन वा ।
तथा मानुष्यदेहेन छन्नोऽयं तेजसां निधिः ॥९॥

मम भाग्यवशादन्तेवासित्वं समुपागतः ।
तदाज्ञप्तो मया रामो विधास्यति तवेप्सितम् ॥१०॥

---

१. परिप्रश्नो—क० ।

एवमाश्वास्य राजर्षि राममाहूय सादरम् ।
प्रोवाच निखिलं वृत्तं सत्यसन्धो मुनीश्वरः ॥११॥

अथ सदसि स राघवस्तमूचे मुनिवरमायतचारुबाहुदण्डः ।
सरसिजनयनो नमन्नतांसः पुलकितमोमिति मञ्जुकायकाण्डः ॥१२॥

गुरुवचनपरायणो हि लोको भवति सदैव हि सर्वकर्मदक्षः ।
किमु तदभिमतं विधातुकामः प्रभवति वेति उदेति नेति शङ्का ॥१३॥

धनुरशनिकठोरमाकलय्य विकलमना मनसा नमन्महेशम् ।
समुपचितनिजौजसा ततोऽसावनुगतबन्धुधुरन्धरो जगाम ॥१४॥

धनुर्द्धरणिमण्डले लसितमाशु सन्तोलय-
न्नधिज्यमभियोजयन्ननिशमेव विस्फारयन् ।
रवेण परिपूरयन्नखिलमम्बरं क्रीडयन्
बभञ्ज कुलकामिनीजनमनो मुदा रञ्जयन् ॥१५॥

ववर्ष सुमनोभरं सुरवरो ननर्त्तातुरं
तुरङ्गवदनोऽनिशं जयिनि राघवेशे भृशम् ।
चचाल वसुधातलं किल नगादिभाराकुलं
ववावनिलसन्ततिः पुलकितस्स वै भूपतिः ॥१६॥

॥ इति श्रीजानकीपरिणये द्वितीयोऽङ्कः ॥

• • •

# अथ तृतीयोऽङ्कः

ततः किमिति पारिपार्श्वपरिप्रश्ने पुनः सूत्रधारः—

अथो विकचमम्बुजं निजमुखश्रिया गञ्जयन्
पुरोधसमसौ मुदा दशरथस्य राज्ञोऽन्तिकम् ।
विधास्यसि तथा यथा त्वरितमेत्यसावात्मजै-
रिहेति निगदन्मुहुस्त्वरितमेव सम्प्रेषयन् ॥१॥

महेन्द्रसदृशस्सुताकरतलोपनीतस्रजा
विभूष्य रघुनन्दनं तमभिनन्द्य वाक्यादिभिः ।
स्वकीयपुरवासिनः कलयितुं निदिश्योत्सवान्
विवेश सवितानकैर्विविधनृत्यवाद्यादिभिः ॥२॥

पुरोधास्त्वरयाऽयोध्यां गच्छन् राजपुरोहितम् ।
पप्रच्छ सिन्धुदेशस्य पन्थानं सरलं सुधीः ॥३॥

सोऽप्यपृच्छद्द्विजश्रेष्ठं को भवानिति यष्टिधृक् ।
कुत्र गन्ता सितोष्णीषो द्विजवेषधरोऽध्वग ॥४॥

[1]मैथिलेन्द्रो महाराजो देवराजोपमो जयी ।
वरार्थी तस्य कन्यानां प्रेषितोऽहं पुरोहितः ॥५॥

[2]अहो भाग्यमहो भाग्यं मम दैवादुपस्थितम् ।
स्थापयाम्यद्य भवने चलितुं न ददाम्यहम्[3] ॥६॥

[शतानन्दः—]

को भवान् मद्गतिद्रोही मृदुवाचा महाग्रही ।
न जाने कुलशीले ते कथमातिथ्यमुत्सहे ॥७॥

[वशिष्ठः—]

कौशलेन्द्रो महाराजो देवराजसखो जयी ।
तस्याशेषक्रतूत्साही नियुक्तोऽहं पुरोहितः ॥८॥

---

१. 'शतानन्दः—'इत्यधिकः पाठः । २. 'वशिष्ठः—' इत्यधिकः पाठः क० ।

३. अतः परं [ ] कोष्ठान्तर्गतः पाठः उभयोरपि मात्रिकयोर्नास्ति ।

ततः प्रसन्नहृदयौ नमस्कृत्य परस्परम् ।
आश्लिष्य जग्मतुश्शीघ्रमाश्रमं परमश्रियम् ॥९॥
उपवेश्यासने स्फीते भृङ्गारच्युतवारिणा ।
प्रक्षाल्य चरणौ हर्म्ये स्वासने संन्यवेशयत् ॥१०॥

स कौशलो मैथिलमात्मकौशलादपूपुजत्साधुसपर्य्यया स्वयम् ।
स्थितेऽपि भृत्ये स्वयमेव साधवः समर्च्चयन्ति ह्यतिथिं सुदुर्लभम् ॥११॥
गुणाकरत्वेन बुधेन वर्णिता वसत्यलक्ष्मीर्बुधमन्दिरे सता ।
मनोरथघ्न्याऽतिथिपूजने तयाऽगलत्स विद्वानिव चातिलज्जया ॥१२॥
सुनम्रतानीतिभरातिभङ्गुरो वचोऽमृतैस्संस्नपयन्मुहुर्मुहुः ।
यथाशुतोषं सहसा दशाननो व्यतूतुषत्तं तु तथैव कौशलः ॥१३॥
मुदा सदातिथ्यविधावकातरश्शनैश्शनैराह नयैकसागरः ।
सुदामदत्तान्नमिवान्नमल्पकञ्चकार मेऽद्यार्य्यतमेषु साहसम् ॥१४॥
इति ब्रुवाणं तमुवाच सोऽतिथिर्नहीदृशं ते कथनीयमर्हति ।
अभीप्सितानीव हि कल्पपादपप्रसाधितानीह विभान्ति सर्वशः ॥१५॥
अहोऽर्हतीत्थं वचनन्त्वरिक्थिनां भवादृशातिथ्यविधानकामिनाम् ।
मनोरथं ह्येव निहन्ति गेहिनां दरिद्रता नो वचनं मनस्विनाम् ॥१६॥
अहो महत्त्वं महतामतीव स्वल्पोपहारं बहुमेव मेने ।
वरार्थिनेऽर्घादिपयःप्रदात्रे प्रयच्छतीष्टं हि वरं समुद्रः ॥१७॥
महाकुलानां कुलरीतिरेषा दोषाकरस्यापि न चाह दोषम् ।
पयः पयोधेर्विरसं निपीय पयः प्रशंसन्ति हि तत्पयोदाः ॥१८॥

आमोदस्सुमनोविनोदजनको जातो जगन्मण्डले
वासस्ते विमलो यतो गतवतो गात्रस्तथा जायते ।
निश्शङ्कं निशि भावयंस्तव गुणान्विज्ञशिरः कम्पयन्
मेने धन्यतमं मुदेव कुमुदं श्रीलं भवन्तं न कः ॥१९॥
सत्यं त्वद्वचनं मयाप्यवगतं धन्यातिधन्यं यशो
भव्यं चान्द्रमिव त्वदीयममलं सौजन्यजन्यं यतः ।
शीलैश्शीततरैः करैस्सुमनसामानन्दकन्दैर्भृशं
व्याप्तं भाति भवे भवत्यतितरां जाते प्रसन्ने ततः ॥२०॥

वारं वारमतीव मञ्जुलकथालापैः स्फुरच्चेतसा
निर्णीताऽखिलमित्रता त्वयि विभो भानाविवेति स्फुटम् ।
स्वीयेनैव गुणेन तेन सहसा त्वं शीतशीलद्युते-
र्विस्तारं कलयन् करोषि कमलं फुल्लं कदा नेह यत् ॥२१॥

यद्येवं विदितं विभोऽत्र भवता ज्योतिर्विदा श्रीमता
श्रीकृष्णेन तदा समस्य भवतस्सर्वा विभूतिर्मता ।
सद्यो लोचनशोकमोचनकरो मित्रे विभूतिप्रदो
लोके यद्धि धनञ्जयं गुरुतरं कुर्वन्मुदा राजते ॥२२॥

कथासमुद्रे भवतामगाधे निमज्जतीयं हि कथासरिन्मे ।
पारं परं तस्य कथं सुदूरं समीहते सा सहसाभिगन्तुम् ॥२३॥

अतः परं चारुकथां विसृज्य श्रमापनुत्यै शयनं विधेहि ।
अहन्तु तावन्निजकर्म कर्त्तुं व्रजामि राज्ञस्सदनं सुशीघ्रम् ॥२४॥

**उक्तिप्रत्युक्त्यनन्तरं पुनस्सूत्रधारः—**

हस्तेन हस्तं परिगृह्य शस्तं पर्यङ्कशय्यामधिरुह्य सद्यः ।
स मैथिलो मञ्जुलमात्मवृत्तं राजोपदिष्टं सकलं बभाषे ॥२५॥

अथ स कौशलस्तावद्राजधानीं व्रजमानो महामोदमोदितमना महाराजराजीवलोललोचनविलोकितकलेवरोऽतिहृष्टपुष्ट इवाशेषविशेषमङ्गलरहस्यं सूचयन् पुलकितमहाराजसपर्य्योचितनित्यनैमित्तिकानुष्ठानानि सम्पादयन्निदेशानुसारेण स्वालयस्थितं निमिवंशावतंसश्रीलश्रीमद्राजर्षिप्रेषितं पुरोहितं रघुवंशावतंसश्रीलश्रीदशरथमहाराजसमाजं समगमयत्तेनावेदितयथार्थवृत्तान्तो नितान्तोचितस्वान्तोत्थितमहानन्दकन्दो दीनारदशकं महानन्दावेदकाय तस्मै श्रीशतानन्दाय यथार्थाभिधाय प्रयच्छन्नेवानन्दचपलः स कौशलोऽवनिपालस्स्वभृत्यान् प्रस्थातुं समादिदेश ॥२॥

तदादेशविशेषपर्व्वोच्छलितायोध्यानगरसागरबहिर्भूतकोटिकोटिगिरीन्द्रगञ्जनगजेन्द्रवृन्दवृन्दारकवृन्दवन्दितपदारविन्दपुरन्दरहयेन्द्रहेलनवाजिराजिराजितमहारथिरथरथाङ्गधारोद्धूतधूलीपटलपरिच्छन्दपतङ्गमण्डलमेदुराम्बरदिक्चयमणिमयमुक्ताप्रवालकाञ्चनमयविभूषणविभूषितसमस्तशस्तसैन्यसन्ततिसंवलितो महाराजः परमोपचयैस्त्वरितमेव मैथिलाधिपपुरीं द्वारवतीं तरङ्गैरुदन्वानिव रुरोध ॥३॥

ततस्स मैथिलेन्द्रोऽपि तुल्यश्रिया संवलितो निजकुलोचितव्यवहारचतुरोऽतित्वरितमेव तत्पुरोऽतिविनयेनोपगतोऽतिदूरतोऽप्युपागतमप्यानन्दितवक्त्रपद्मं श्रीदशरथं गजरथाश्वपत्त्यादिसंवलितं निजसमाजमुपनयन् महामहानाततान ॥४॥

ततोऽतिविचित्रविविधवसनवधूजनवृन्दगीयमानकुलदेवतास्तुतिश्रुतिसमुदितानन्दश्रीश्रीजनकनन्दिनीबन्धुः सविनयमतिनीतिसिन्धुश्रीश्रीलश्रीरामचन्द्रं चलत्कुण्डलादिनिखिलवेषोज्ज्वलं सिंहद्वारमानयन्मैथिलीकुलमण्डलस्थं चकार ॥५॥

अथात्रैवावसरे निरुक्तविविधसरलकोमलगद्यपद्यप्रबन्धेन सदस्याननुमोदयन्नपि श्रीमन्मैथिलीचयचमत्कृतोद्वाहमङ्गलाचारचतुरसरससखीसमन्वितहावभावभरभारभङ्गुरस्वरनटीसमागमनाय नेपथ्याभिमुखमवलोक्यान्तःपुरे प्रविशन्तं श्रीराघवेन्द्रमेवानुवर्णयन्नान्दीश्लोकं सूत्रधारः पठति ॥६॥

यो देवस्सुरवृन्दवन्दितपदद्वन्द्वारविन्दो दिवि
श्रीमान् श्रीपतिवेश्मनि प्रभुतमो मायामयः कोशले।
कौशल्याहृदयातिमञ्जुकुमुदानन्दप्रदो भासते
सोऽयं श्रीमयमैथिलीकुलवधूसङ्गञ्जितः पातु वः ॥२६॥

ततस्समुपागता नटी किमाज्ञापयसीह प्रभावितिसुस्वरं निजगाद। नटवरोऽपि मत्सूत्रार्थमाकलय्य मैथिलभाषया ललितगीतनृत्येन सभ्यानभ्यामोदयेत्यादिदेश ॥७॥

प्रथमन्तु 'यो देव' इति श्लोकं विज्ञाय नटी नृत्यति ततस्तथा नृत्यावसाने—

**सूत्रधारः—**

सौमित्रिस्सहसा प्रसन्नमनसा मुक्ताप्रवालादिकान्
बालानां शिरसा धृतेषु पयसा पूर्णेषु वै मुष्टिशः।
कुम्भेषूपरिपल्लवेषु रभसात् प्रक्षिप्य रामानुगो
रत्नैः काञ्चनसञ्चयैर्विरचितं प्रायात्परं मण्डपम् ॥२७॥

[पुनरत्र नृत्यावसाने गेयगीतार्थश्लोकं पठति]

**सूत्रधारः—**

सम्प्राप्य सीतां विधिना प्रदत्तां रराज कान्तां कनकासनस्थः।
सौदामिनीं चञ्चलताविहीनां सुमेरुशृङ्गस्थ इवाम्बुदोऽसौ ॥२८॥

[पुनरत्र तथा नृत्यावसाने तथा श्लोकम्]

मुदा सवेद्यां रमया रमेशः सुविष्टरस्थः स्रुवयुक्तहस्तः ।
प्रधानसाक्षादनले समिद्धे कुलद्वयं पातुमिवाजुहाव ॥२९॥

[पुनरत्र तथा श्लोकं पठति]

**सूत्रधारः—**

सौभाग्यमस्यै बहुमूल्यलभ्यं रत्नं सुवर्णादिचयं ददानः ।
दारानुजातां परितोष्य रत्नैस्सदार आर्य्यालयमाजगाम ॥३०॥

(अत्रापि[1] पुनः पूर्ववत् पठति सूत्रधारः)

राजर्षिदत्तां मणियुक्तमुद्रां सम्प्राप्य तत्पायसमाशु भुक्त्वा ।
स मैथिलीगीतसुगीतिमारादाकर्ण्य केलीसदनं जगाम ॥३१॥

ततः प्रभाते पुरसुन्दरीणां सुनीलपीतारुणचेलभाजाम् ।
व्रजन्तमारात् सुवरं निरीक्ष्य गन्तुं सुगेहं न शशाक सद्यः ॥३२॥

काचिद्धेमलताप्रवालललितिका विद्युल्लतेवोज्ज्वला
लीलालोहितलोचनालकमुखी चन्द्रानना काऽपि च ।
श्रीरामं मदनाभिराममभितः सर्वास्समागत्य ता-
स्तूर्णं पूर्णमनोरथं सहसितैश्चक्रुः कटाक्षामृतैः ॥३३॥

सर्वा यौवनगर्वपर्वतवरव्यस्तोरसस्सुस्मिताः
सीताकान्तनितान्तकान्तवदनं वीक्ष्यारविन्दाक्षिभिः ।
स्वच्छन्दं रभसात्प्रहस्य सहसा श्यामं सुमूकं शिशुं
सीताभ्रातृकलत्रवर्गवलिताः संभाष्य तस्थुश्च ताः ॥३४॥

श्यामोऽभिरामो निजगाद वादमितीव पीयूषमयूषवक्त्रे ।
यः कृत्रिमोऽलङ्कुरुते मुखन्ते न निन्दनीयस्स भवादृशीभिः ॥३५॥

दुलारवाचेति तमाह सद्यस्सीतानुजा वारिजवक्त्रनेत्रा ।
मद्भ्रातृजायाजनवञ्चितोऽसि न मैथिलीनां चरितं हि वेत्सि ॥३६॥
रहोरहस्यैस्सरसैस्स वञ्चितस्समाह संक्षेपरहस्यमाक्षिपन् ।
तथा यथाहं परिवञ्चितोऽनया न वञ्चनीयस्स ममानुजस्त्वया ॥३७॥

---

१. अत्रापि तद्वदेवमग्रेऽपि—ख.

ततश्चतुर्थ्यामपरत्र रात्रौ समाप्य कर्म्मात्मकुलोचितं सः ।
जातीफलैश्चारुकरङ्कमानैस्सन्तोष्य पौरांश्च ननाम दुर्गाम् ॥३८॥

सुवर्णरत्नैर्गुरुविप्रनारीस्सन्तोष्य सन्नम्य बहिस्समाजम् ।
व्रजन् जनौघैस्सहसोत्थितैस्स उवास साकं सदसः सुपीठे ॥३९॥

विप्राङ्गनानां कुलधर्मभाजां स्थालीः सपर्णाः सहसा गताः सः ।
शीघ्रं समुत्थाय मुहुर्न्ननाम तत्पार्श्ववर्त्ती प्रशशंस ताश्च ॥४०॥

पर्णस्थारी[1] सुनारीविरचितपुटकैस्स्वर्णवर्णैस्सुपूर्णै-
स्सम्पूर्णा चारुपर्णा सुरससुरभिभिः शुद्धकर्पूरकाद्यैः ।
मध्ये चान्द्रीङ्करङ्कं श्रियमभिविदधद्बिभ्रतीरक्तवस्त्रं
सेयं सम्यक्प्रदत्ता शतमखसदृशं पुण्यपुञ्जं व्यनक्ति ॥४१॥

कर्प्पूरादिसमन्विता हि गुरुणा विज्ञेन सुस्नेहतो
दत्तैकाऽपि सुवीटिका सुकठिना यस्मै मुदा श्लाघते ।
तस्य श्रीमति संसदि प्रियजनैः पुण्यं परं स्तूयते
येभ्योऽनेकसुवीटिकाभृशमसौ तेषां पुनः का कथा ॥४२॥

यासां पाणिसरोजसुन्दरतरन्यासेन संयोजिता
सालोक्याकलयन् परं गुणगणं सद्यश्शिरः कम्पयन् ।
मौनी मुग्धमतिः सदस्य इह यत्तासां गुणान् वर्णितुं
शक्तो नैव फणी न चामरगुरुः के वा वयं मानुषाः ॥४३॥

(अथ गीतप्रशंसाश्लोकः)

अस्माभिः खलु पूर्वजन्मनिकरेऽकार्य्यङ्घ्रिसेवा गिरां
काश्यां सम्प्रति सत्फलानि सहसा तत्पुण्यजातानि नः ।
सूच्यन्ते प्रियकोमलामलपदैर्द्दिव्यैर्गुणोत्कीर्त्तनै-
र्गायन्तीभिरभीप्सितानि गुरुभिर्गीतानि ताभिर्गिराम् ॥४४॥

---

१. न चैवं प्रथमयात्रायां जामात्रे पर्णस्थालीप्रदानं व्यवहारविरुद्धं क्षत्रियकुलरीतिविरुद्धञ्चेति वाच्यम्, पुरा प्रथमयात्रायामेव तद्व्यवहारस्य लोकसिद्धत्वाद् आधुनिकानान्तु हरिसिंह-देवकृतजातिपणदानव्यवहारवत्प्रथमयात्रायां द्रव्यव्ययभयान्नमस्कारमुद्रादिदानमकृत्वैव स्वगेहागमनेनाद्येतरयात्रायां तथा व्यवहारः, विप्राङ्गनाभिरतिप्रणयेन स्वजामातृबुद्ध्या तथाचरणे क्षत्रियकुलरीतिविरोधानवकाशाच्चेत्यवधेयम् ।

( इति वरानुयायिनः सूक्तिः )

ते देवा इति गीयते मतिमता क्षुद्रान् सुभक्तानपि
ये ये धन्यतमाः स्तुवन्ति रसिकाः पर्णादिदानैर्मुहुः ।
दृष्ट्वा तन्नयनैस्सुपुण्यसदनैर्जाताः कृतार्था वयं
तस्माद्वो भुवि मानुषा गुरुगुणात् वक्तुं समर्थाश्च के ॥४५॥

जाता मे कुलदीपिकामहकरी पूतङ्करी यत्कुलं
धन्या धन्यतमा रमेव परमा विष्णूपमस्त्वं यतः ।
विष्वायेति निगद्य भक्तिददतां पर्णं रमेशो यथा
भक्त्या प्रीतमनास्तथा मयि मुदा भूत्यै भवेथास्सदा ॥४६॥

मान्यानामतिविज्ञतासुजनता सद्भिस्सदा स्तूयते
सा दृष्टा भवतां प्रमादवशतस्सत्यं महावंशजाः ।
श्रीमन्तस्सकलान् भवन्त इह तान् दोषान् परित्यज्य यत्
सद्यस्संसदि सर्वथा परगुणान् वक्तुं कवीयन्ति तत् ॥ ४७ ॥

( इति स्त्रीलोकानुबन्धिनस्सूक्तिः )

एवमेव जनकात्मजामथो लक्ष्मणस्तदनुजां सुमध्यमाम् ।
उद्धवैरुदवहत्ततोऽनुजो तौ कुशध्वजसुकन्यके शुभे ॥ ४८ ॥

यात एव कृतकृत्यतामसौ कोशलाधिपतिराशु सद्गतिम् ।
सस्नुषात्मजगणस्य मे गृहे श्वः प्रयाणसमयेऽथ पृष्ठवान् ॥ ४९ ॥

सोऽपि जातकृतकृत्यतो नतो मैथिलो मुनिवरो नृपोत्तमः ।
स्वीचकार न पुरा तथा कथां स्वीचकार बहुधार्थितः पुनः ॥ ५० ॥

राघवाः परदिनेऽथ हर्षिताः प्रस्थितास्सदयितास्सुसत्कृताः ।
भार्गवं पथि पराङ्मुखं मुदा संविधाय ययुरात्ममन्दिरम् ॥ ५१ ॥

श्रीमांस्तु कोशलेन्द्रो महत्प्रभावं पथि विलोकयन् श्रीजानकीकान्ते राज्यभारं दातुकामः स्वधामागतोऽतिहर्षितोऽहर्निशमेव समयानुसारेण भयरो-असावरी-भैरवी-टोडी-अलहिया-वेलातुर-सारङ्ग-धनास्री-[ श्री ]-पुरवी-श्रीराग-गौरी-कल्याण-श्यामकल्याण -

ईमन- पर्य्य-केलाङडा-अकान्हरा[1]-अड़ाना-सोरठ-हिण्डोल-याजमल्लार-विहाग-याजमन्ती-सोहनी-विहाङडा-केदारा-ललित-मालकौश-छन्दपरिबन्ध-त्रेवट-तिलाना-देश-पीलू-हम्मीर-काफी-जङला-झिझोटी-दादडा-पाचडा-रेक्ता-पोस्ता-गजल-गङ्गे-दीपक- मल्लार-वयरवा-डोमनी-कहरवा-इत्यादिभाषाप्रसिद्धविविधगीतैर्नृत्यतो वारवध्वादींश्च विविधनर्त्तकान् पूर्णाभिलाषान् कुर्वन् प्राप्तनिधिनिचय इवानन्दितः स्वस्थो बभूव[2] ॥ ८ ॥

॥ इति श्रीजानकीपरिणये[3] तृतीयोऽङ्कः ॥

● ● ●

१. कान्हरा—ख० ।

२. ततः सर्वे निष्क्रान्ताः इत्यधिकः पाठः—क० ।

३. सदारसर्वपुत्रागमनं नाम—इत्यधिकः पाठः—क० ।

# अथ चतुर्थोऽङ्कः

अथाभिषेकागमचारुकामः पितुर्निदेशाद्विपिनं जगाम।
तत्रापि दैवाद्धृतचारुरामः सन्तप्तचित्तो विललाप रामः॥ १॥

व्यालोकमालोकयितुं करालं तवालयं नीरवरत्नजालम्।
शक्तोऽभियुक्तोऽप्यहमाशु नेह वियोगयोगानलदग्धदेहः॥ २॥

बाले विलासः खलु तावदेव प्रियस्सवाष्पो नहि यावदेव।
प्रिये पुनस्तादृशि गुप्तवासैरलं रसाभासकरैर्विलासैः॥ ३॥

पदं जवाहेमसरोरुहाभं सुशीतलं शान्तिकरं सुशोभम्।
अये प्रिये किं विधिवञ्चनेन सन्दह्यते तेन सुहृत्स्मृतेन॥ ४॥

पुरा यदाहं तव चारुजङ्घावनीशसौवर्णसुदण्डधारी।
अये तदाहं मदनान्तकारी सोऽद्यैव कस्मात्स्मरतोऽन्तकारी॥ ५॥

मदननृपतिगेहद्वाररम्भाविशेषामलमसृणतरोरू सर्वदासौख्यहेतू।
सपदि रहसि मुग्धे विप्रियत्वं प्रिये किं स्मरति रहसि कान्ते येन तौ दुःखहेतू॥६॥

सरलविमलभावे भूरिभूरिप्रयत्नाद्गुरुनिविडनिमग्नग्रन्थिनीवीविमोक्षः।
अधिगतवरमोक्षो यः पुरा चिन्तितो मे प्रभवति स हि कस्माद्वैपरीत्येषु दक्षः॥७॥

सुभगनिविडनाभीनिःसृता रोमराजी सरलविमलभावा पन्नगी यापि तुष्टा।
विमुखि सुमुखि बाले चिन्तया चित्रमेतत् प्रदशति हितमर्म्मण्यासु सापीह रुष्टा॥८॥

विपुलविमलपक्वश्रीफलश्रीहरौ तेऽरुणिमरुचिरशीर्षौ यत्कुचौ चारुवक्त्रे।
सपदि रहसि बाले दृक्पथावर्त्तिनौ तौ हरत इति विचित्रं कान्तिचित्ते मदीये॥९॥

वक्त्रं ते निशि संविलोक्य शशिना भीतेन शीतेन वै
नित्यं क्षैण्यमुपागतेन सहसा सम्पादिताऽमातिथिः।
सापि त्वद्वदनावलोकनकृते निस्सारयन्ती कलां
स्तोकं स्तोकममुं पुपोष च शशीभीत्या पुनः क्षीयते॥ १०॥

त्वदीयमृदुलाधरं तुलयति स्म विम्बं वृथा
कदाचिदपि नो वरं रसविहीनरूपं यतः ।
ततस्तव तवेव तन्मनसि निश्चितं यन्मया
लपामि सततं ततो जगति नेति लभ्यं पुनः ॥११॥

दशनदंशनशासनजक्रुधाविमुखतां सुमुखि त्वमुपागता ।
कलयसीह कथं विविधव्यथं स्मृतरदावलिभं विगतक्षतम् ॥१२॥

तव सुभास्यसुभाक्रकचार्दितः कचविधुन्तुद आशु सुसाधितः ।
दलयति स्म कथं मम चेतसः स्मृतिवशाददग्रे हि निरागसः ॥१३॥

यदि गतासि रतासि महान्तरं पुनरिहाशु विहारमतिर्नहि ।
अलमलङ्करणैस्तव तैर्गुणैर्म्मम मनो विधृतैरिह सस्मितैः ॥१४॥

प्रणयशोषणदूषणकिङ्करव्रजमृते वनिते निकटं तव ।
अलमलङ्करणं तमशेषतो नयितुमाशु न कोऽपि भवेदितः ॥१५॥

एवं विरहशोकेन विफलं विलपन्बहु ।
मीलिताक्षः क्षितौ क्षिप्रं मूर्च्छितः पतितोऽथ सः ॥१६॥

**तत्रैकाकी लक्ष्मणो भृशमुद्विग्नोऽपि रामं सप्रज्ञं ज्ञानबलेन चकार—**

सौमित्रिः सान्त्ववादै रघुकुलतिलकं बोधयामास यत्नात्
प्राप्तप्रज्ञोऽथ विज्ञो विदितविधिविधिर्वञ्चितः स्त्रीविलासैः ।
प्रोवाच प्रौढवाचाऽचलबलदलनात् पापिनः प्राणदण्डं
कृत्वा सीतां नयसि न कथं कोऽस्ति जेता रणे त्वाम् ॥१७॥

ततोऽसौ सानुजो रामोऽन्वेष्टुं सीतां विमूढवत् ।
वार्त्तां पृच्छन् भ्रमन् ध्यायन् जगाम गिरिमातुरः ॥१८॥

**(ततो विदूषकः प्रहस्योच्चैराश्चर्य्यमाश्चर्य्यमहार्य्यस्य परमेश्वरस्य श्रीदाशरथेरसम्भाव्यमेतदिति सर्वथावृथायुष्मत्कथाप्रबन्धो निर्म्मूलकत्वादिति पुनः पुनः प्राहसत्)**

सूत्रधारश्चा ह] किमेतद्बालिशोऽसि न वेत्सि—

ललाटलेखाफलमेव भुङ्क्ते नान्यत्फलं कोऽपि भुनक्ति किञ्चित् ।
देवो मनुष्योऽपि च राक्षसोऽपि स्वयं विधाताऽपि च जन्मदोषात् ॥१९॥

**ततो विरोधमाक्षिपन् विदूषकः पुनः प्राहसत्**

पुत्रार्थकामा बहवो यजन्ति
तथाशनाशाश्शतशः पचन्ति ।
विज्ञानकामाः शिशवः पठन्ति
प्रायो ह्यभीष्टं फलमाप्नुवन्ति ॥२०॥

**पुनः सूत्रधारः विधेयांशे क्वचिद्वचापकताभङ्गसूचकप्रायः पदमाहात्म्यान्निखिलदोषमुद्दिधीर्षुरनुष्ठानादेस्सामान्यसामग्रीसहकारितां कविरेवाक्षिपतीति नात्र दोषः**[1]

पुनर्विदूषकः बलवतामलं सहायैरिति । ततः सूत्रधारः—

रजोगुणादीन् सहकारिसङ्घानवाप्य सर्गादिविधौ महेशः ।
प्रवर्त्ततेऽतोऽत्र जनोऽपि तद्वदभीष्टसिद्ध्यै सुकृती विधिज्ञः ॥२१॥

ततोऽसौ निष्क्रान्तः —

**पुनस्सूत्रधारः—प्रकृतमनुस्मरन् विरहिणोः सुग्रीवराघवयोरुक्तिप्रत्युक्ती**

मम दाराहरो वाली तव कोऽसौ नवेद्म्यहम् ।
मिलनं ह्यावयोर्दैवाच्छ्लाघ्यं वै मिलनं तयोः ॥२२॥

---

१. अत्रेदं तत्त्वम् सर्गारम्भे सुखदुःखावच्छेदकशरीरपरिग्राहकादृष्टविशेषान् प्रयच्छन् स्वांशभूतान् जीवान् स्वेच्छया पुरुषधौरेयस्सृजति । सृष्टेषु च तेषु सुखदुःखादेः पौर्वापर्य्यनियामिका ललाटलेखाः स्वाभाविकाहोरात्रभाविफलचयं प्रयच्छति । ततस्ते कतिपयजीवाश्शास्त्रावलोकिनो विहितमेवाचरन्तो निषिद्धं कर्म त्यजन्ति । केचिदज्ञानिनो विपरीतमाचरन्ति, केचिच्च कामिनो विधिना फलविशेषप्रापकानुष्ठानानि कुर्वन्ति । ते ज्ञानिनः सर्वे स्वस्वकर्मविशेषजन्यादृष्टादिकारणकलापात्मिकया विशेषसामग्र्या सह कृतां ललाटलेखादिसामान्यकारणकलापात्मकसामान्यसामग्रीमिह जन्मनि जन्मान्तरे वा स्वस्वावच्छेदकसमयावच्छेदेन कृतकर्मफलानि जनयन्तीं विज्ञाय पुनः पुनस्तद्वदेवाचरन्ति, केचिच्चाज्ञानिनस्तां सामग्रीमविदुषो जना यज्ञादिफलानां कुत्रचिद्विलम्बदर्शनेन तत्राप्रामाण्यमभ्युपगच्छन्ति । न हि तेन सामग्रीव्याप्तिर्विलुप्यते च यज्ञाद्यनुष्ठानमेव वर्द्धते चाविहिताचारस्ततश्शिष्टविशेषानुष्ठानविशेषस्य दैवाद्दृष्ट्या सहसा शौचाचारवर्जिता अप्यविधिपूर्वकमनुष्ठानमाचरन्ति, नहि ते कदाचिदपि तत्फलभागिनो भविष्यन्ति । ये च विवेकिनश्शुचीभूताः स्वविधिनानुष्ठानमाचरन्ति, ते पुनरवश्यं विशेषसंवलितसामान्यसामग्र्या फलभागिनो भवन्त्येवेति ।

तव शत्रुनिहन्तास्मि मार्गणेनाशुगामिना ।
भव मेऽरिनिहन्ता त्वं मार्गणेनाशुगामिना ॥ २३ ॥

एवमेवास्तु ते वाक्यं वीरश्रीमन् कृपानिधे ।
विरहाग्निसमुत्तीर्णं करिष्येऽहं तथाविधः ॥ २४ ॥

ततः कपीन्द्रं कपिनोपदिष्टं विव्याध आरात्स शिलीमुखेन ।
गतासुमाशु प्रसमीक्ष्य शत्रुं सुग्रीवमेवाधिपतिश्चकार ॥ २५ ॥

गतात्मखेदश्चिरलब्धदारश्चारप्रचारैरभितोऽन्वियेष ।
अप्राप्यवार्त्तापरमार्त्तचित्तस्समादिदेशाशुगनन्दनं सः ॥ २६ ॥

श्रीरामं मुहुरानमन् पुलकितस्सम्प्राप्य तन्मुद्रिकां
तीर्णः पूर्णमनोरथो जलनिधिं दग्ध्वाशु लङ्कापुरीम् ।
श्रीमान्वीरवरः परोपकृतिकृत्तीर्णस्तथा सागरं
श्रीरामं प्रणिपत्य तूर्णमकरोत्पूर्णाभिलाषं कपिः ॥ २७ ॥

श्रुत्वा तत्क्षणमुद्धुरो रणरसश्श्रीराघवस्सानुज-
श्श्रीसुग्रीवसमग्रसैन्यसहितः सिन्धुं बबन्धाद्रिभिः ।
हत्वा रावणमाहवे हनुमता सन्दर्शितां श्रीहृतां
सीतां क्षिप्रपरीक्षितां हुतभुजा हेमप्रभाञ्चाप सः ॥ २८ ॥

चान्द्रे[1] पुष्करनागवाजिविधुभिस्संशोभितेऽब्दे[2] शुचौ
धीरो धैर्य्यमहोदधिं मधुरिपुश्श्रीमानुबबन्धाचलैः ।
सीतारामसुकीर्त्तनैर्गुरुवचो दिव्याशुगेनापरां
जित्वा दुर्जनरावणं स्वदयितामाप प्रणेतास्य च ॥ २९ ॥

---

१. चान्द्रे = चन्द्रवासरे, पुष्कर = ०, नाग = ७, विधु = १, अङ्कानां वामतो गतिरिति नियमात् १७८० शकाब्दे, मधुरिपुः मधुसूदनो रामः कविश्च तदाख्यः । स्वदयितां = रामः सीतां कविश्च प्रियां कृतिरूपामाप, इयं कृतिः समासेति यावत् ।

२. (भि० शाके०) क० ।

अत्राशेषार्थगीतैर्नृत्यन्तीं मुहुरभिवादयन्तीं सहसा श्रीहनुमन्नाटकनृत्यादिकं बहुधा दृष्टवन्तोऽपि सदस्याः सुरसिकाः सर्वत्र मैथिलालापव्यवहारचमत्कारानवगम्याति-प्रसन्नाः प्रसन्नतमाश्चक्रुः ।

**ततः सर्वे निष्क्रान्ताः**

**॥ इति श्रीजानकीपरिणये[1] चतुर्थोऽङ्कः ॥**

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥१॥

**महाकवेरयं श्लोकः**

[2]नन्दाङ्काद्रीन्दुगिलिते शाके श्रावणिकेनिले ।
दर्शे गुरावलेखि श्रीशिवदत्तेन पुस्तकम् ॥

● ● ●

---

१. 'वजयपूर्वकं श्रीरामचन्द्रगमनं नाम' इत्यधिकः पाठः क० ।
२. १७९९ शाके ।

# श्लोकानुक्रमणिका

• • •

# सुसंग्राह्याः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशिता महत्त्वपूर्णा अनुसन्धानप्रबन्धाः

१–**अथर्ववेदे शान्तिपुष्टिकर्माणि** [वेदः] श्रीमत्या मायामालवीयया वैदिकवाङ्मयस्यानुशीलनं कृत्वा विरचितो विविधैरानुसन्धानिकनिष्कर्षैः समेधितोऽयं गवेषणाप्रबन्धः— ८-००

२–**पाणिनीयव्याकरणे प्रमाणसमीक्षा** [व्याकरणम्] श्रीमता रामप्रसादत्रिपाठिना विरचिता। इयं गवेषणाप्रधानैस्तात्त्विकैः, अथ च शास्त्रीयगभीरानुशीलनतथ्यैः समेधिता— २६-२५

३–**प्रक्रियाकौमुदीविमर्शः** [व्याकरणम्] डॉ० आद्याप्रसादमिश्रेण लिखितः। श्रीरामचन्द्राचार्यविरचितां प्रक्रियाकौमुदीम् उपजीव्यत्वेनाधारीकृत्य लेखकेन गवेषणापूर्णबहुविधानुसन्धानिकनिष्कर्षा इह सन्निवेशिताः— ८-००

४–**ग्रहगणितमीमांसा** [ज्योतिषशास्त्रम्] डॉ० मुरारीलालशर्मणा विरचिता। इह भारतीयग्रहगणितस्य पाश्चात्यग्रहगणितस्य च तुलाबोधकमनुशीलनं कृतं वर्तते— ५-५०

५–**सूर्यग्रहणम्** [ज्योतिषशास्त्रम्] डॉ० कृष्णचन्द्रद्विवेदिना विरचितम्। इहास्मिन् प्रबन्धे सूर्यग्रहणस्यार्वाचीनां पद्धतिमनुसृत्यानुसन्धानिकाः सिद्धान्ताः समुपन्यस्ताः— १२-००

६–**प्राच्यभारतीयम् ऋतुविज्ञानम्** [ऋतुविज्ञानशास्त्रम्] डॉ० धुनीरामत्रिपाठिना संरचितम्। इह लेखकेन विदुषाऽऽनुसन्धानिकं पर्यवेक्षणं कृतम् ऋतुविज्ञानस्य— १८-००

७–**कातन्त्रव्याकरणविमर्शः** [व्याकरणम्] प्रबन्धलेखकेन डॉ० जानकीप्रसादद्विवेदेन विदुषा भृशमत्र कातन्त्रीयाः शब्दशास्त्रीयाः पदार्था विमृष्टाः— ४०-००

८–**महाभाष्यनिगूढाकूतयः** [व्याकरणम्] अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च डॉ० देवस्वरूपमिश्रः— २६-८०

९–**पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः** [दर्शनशास्त्रम्] अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च सांख्ययोगपदार्था विवेचिताः— ३२-८०

१०–**वैशेषिकसिद्धान्तानां गणितीयपद्धत्या विमर्शः** [वैशेषिकदर्शनम्] गवेषणाप्रबन्धेऽस्मिन् वैशेषिकसिद्धान्तानां गणितीयसिद्धान्तमूलकं विश्लेषणं कृतं डॉ० नारायणगोपालेन— २४-६०

११–**वैयाकरणानामन्येषाञ्च मतेन शब्दस्वरूपतच्छक्तिविचारः** [व्याकरणशास्त्रम्] अनुसन्धानप्रबन्धोऽयं विदुषा डॉ० कालिकाप्रसादशुक्लमहोदयेन विरचितः। प्रबन्धेऽस्मिन् शब्दस्वरूपतच्छक्तिविषये गवेषणात्मकं विश्लेषणं जातम्— २६-५०

१२–**धात्वर्थविज्ञानम्** [व्याकरणशास्त्रम्] गवेषणाप्रबन्धोऽयं बहुभाषाविज्ञेन गवेषणामर्मज्ञेन डॉ० भागीरथप्रसादत्रिपाठिना विरचितः। प्रबन्धेऽस्मिन् धात्वर्थविज्ञानानि प्रकामं समुल्लसन्ति— ३१-००

१३–**भारतीयकर्मकाण्डस्वरूपाध्ययनम्** [धर्मशास्त्रम्] अनुसन्धानप्रबन्धोऽयं डॉ० विन्ध्येश्वरीप्रसादत्रिपाठिना लिखितः। प्रबन्धेऽस्मिन् कर्मकाण्डस्य साङ्गोपाङ्गविवेचनं विहितमस्ति— २६-००

१४–**श्राद्धविमर्शः** [धर्मशास्त्रम्] गवेषणाप्रबन्धोऽयं डॉ० उमाशङ्करत्रिपाठिना विरचितः, श्राद्धविधिश्च भृशं विवेचितः— २२-००

१५–**आयुर्वेदशास्त्रे भूतविद्यायाः संवीक्षणात्मकमध्ययनम्**—अनुसन्धानप्रबन्धोऽयं प्रकामं भूतविद्यातत्त्वगर्भितः प्रकाशितः— ४५-००

---

प्राप्तिस्थानम्—विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी–२२१००२

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
### नूतनानि प्रकाशनानि

१. **ऋग्वेदप्रातिशाख्यम्**—ग्रन्थरत्नमिदं विविधैः पठान्तरैः संशोध्य उवटाचार्य-कृतभाष्यसहितं प्रकाशितम्— ५६ ००

२. **संस्कारसारः**—श्रीदलपतिमहाराजप्रणीतोऽयं धर्मशास्त्रीयो ग्रन्थो विभिन्नैः परिशिष्टैः सम्भूष्य प्रकाशितः— ५०-००

३. **अद्वैतदीपिका**—श्रीनृसिंहाश्रमविरचितेयमद्वैतदीपिका श्रीनारायणाश्रमविरचिताद्वैतदीपिकाविवरणाख्यटीकया सनाथीकृत्य प्रकाशिता—द्वयोर्भागयोः— १०३-००

४. **न्यायमञ्जरी**—श्रीमज्जयन्तभट्टप्रणीतेयं न्यायमञ्जरी श्रीचक्रधरविरचितया 'ग्रन्थिभङ्ग'व्याख्यया समलङ्कृत्य प्रकाशिता—त्रयाणां भागानाम्— १५२-००

५. **व्योमवती**—व्योमशिवाचार्यविरचितमिदं ग्रन्थरत्नं विविधैः पाठभेद-परिशिष्टादिभिः सह प्रकाशितम्— प्रथमभागस्य— २७-००
द्वितीयभागस्य— ५०-००

६. **तत्त्वचिन्तामणौ प्रामाण्यवादः**—तत्त्वचिन्तामणिग्रन्थस्य प्रामाण्यवादपर्यन्तोऽयं ग्रन्थः श्रीगौरीनाथशास्त्रिविरचितया 'प्रभा'ख्यव्याख्यया युतः सन् प्रकाशितः— १५-००

७. **प्रगल्भी**—तत्त्वचिन्तामणिग्रन्थस्योपमानखण्डात्मकमिदं पुस्तकं श्रीप्रगल्भाचार्यप्रणीतया 'प्रगल्भी' व्याख्यया समलङ्कृत्य प्रकाशितम्— १५-००

८. **अभावविमर्शः**—श्रीदीपकघोषप्रणीतमिदं ग्रन्थरत्नं नानाशास्त्रनिष्कर्षभूतं चकास्ति— १६-००

९. **दीधितिकारोपज्ञविचाराणामालोचनम्**—अनुसन्धानप्रबन्धोऽयं दीधितिकारसिद्धान्तानां भृशं समाचोचनां विदधाति— ५०-००

१०. **नित्याषोडशिकार्णवः**—तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं शिवानन्दकृतया 'ऋजुविमर्शिन्या', विद्यानन्दकृतया 'अर्थरत्नावल्या' च टीकया सनाथीकृत्य प्रकाशितम्— ७६-००

११. **परमानन्दतन्त्रम्**—तन्त्रशास्त्रीयोऽयं ग्रन्थो विविधैः पाठभेद-परिशिष्टादिभिरानुसन्धानिकफलश्रुतिभिः सम्भूष्य प्रकाशितः— ९५-००

१२. **शिवमहिम्नस्तोत्रम्**—स्तोत्रमिदं '**मधुसूदनी**', '**नारायणी**' प्रभृतिभिः संस्कृतटीकाभिः, अथ च हिन्दीपद्यानुवाद-हिन्दीव्याख्यादिभिः सनाथीकृत्य प्रकाशितम्—२०-००

१३. **अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्**—अग्निपुराणस्य काव्यालङ्कारभागपर्यन्तमिदं ग्रन्थरत्नं '**काव्यप्रभावृत्ति**'संस्कृतटीकयाऽथ च हिन्दीव्याख्यया सम्भूष्य प्रकाशितम्— ५६-००

१४. **पाणिनीयधातुपाठसमीक्षा**—(द्वितीयं संस्करणम्) व्याकरणशास्त्रीयोऽयं ग्रन्थः स्वीयैर्गवेषणाभरिततत्त्वैः कामं बिभर्ति महनीयामभिख्याम् । प्रथमभागस्य— ८५-००

१५. **वाल्मीकिरचनामृत**—वाल्मीकिरामायणस्य विविधान् प्रसङ्गान् उपजीव्यत्वेनाङ्गीकृत्य विदुषा पण्डितश्रीकुबेरनाथशुक्लेन मार्मिकं तात्त्विकञ्च विवेचमनुष्ठितम्— ५६-००

---

प्राप्तिस्थानम् :—
**विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.**